# भाषैकीकरणम् ।

कति कति हि महानुभावा मेधाविनः कालेन कबळिताः? । तादृशैर्महात्मभिर्लोकोपकारमेव मनसि समाकलयद्भिरतिचिरपरिश्रमेण सम्पादितानि विज्ञानानि पुनर्नास्माकमलभ्यानि संवृत्तानि । किमत्र कारणम्? साहितीसंज्ञकेन सुमहता भागधेयेन समनुगृहीता मनुष्यजातिरितीदमेकमेव विज्ञानपरिपालने सौकर्यं ददाति मनुष्यलोकाय । भाषानामकमिदं महार्घं रत्नं न प्राकाशिष्यत चेत्तमोमय एवाभविष्यन्नरलोकस्य परिणामः । अनादेरनेहसः प्रभृति परःकोटिभिः पण्डितप्रकाण्डैः संचितानि विज्ञानधनानि भाषाकोशागार एव निराबाधं निक्षिप्तानि ।

एकमेव भाषारत्नं भानुबिम्बमिव समस्तं लोकं प्रकाशयितुमलं भवति यदि तदा पुनः कीदृशी स्याल्लोकस्योद्गतिरित्येतदपि विचिन्त्यमानमतिक्रामति मतिमतामपि मनोगोचरभूमिम् । सकलेऽपि लोकालोकान्तःपातिनि भूमण्डले यदि केवलमेका भाषा प्रचरिष्यति तदा नूनं सकलोऽपि मनुष्यवर्गः सोदर्यभावेन सुखमेधिष्यत एवेत्यपि वक्तुं शक्यते । "प्रतियोजनं भाषा भिद्यत" इति किलोल्लसति लोकवादः । तदेवं सति वस्तुस्वभावे किमनेनाशक्यकार्ये मनोरथसोपानरचनेनेति परिहसेयुः परीक्षका अपीति यत्सत्यमिदमाकलयाम्येव । परं तु भाषाभेदनिर्मूलनेन सम्पादनीयः सकललोकव्यापी सुखसौकर्यभूमा केवलमशक्यप्रायेऽपि वस्तुनि जनमिमं वाचालयति ।

सकला अपि भाषा विलेखितुं काचिदेका लिपिः कल्पनीयेति मन्यत एकलिपिविस्तारिणी परिषत् । नूनमनेन मार्गेण भाषाभ्यसनप्रयासो मुद्रापणक्लेशश्च सुतरां लघूक्रियेतेति काममभ्युपगच्छामि । भाषायाः पुनरेकत्वे सम्पादिते कियती भवेत्सौकरीति किञ्चिदालोच्यताम् । एकस्यां भाषायामवतीर्णेन ग्रन्थेन समस्तोऽपि जनसमुदायस्तदानीमुपकृतः स्यात् । तत्तद्भाषासु बहूनां ग्रन्थजातानां निर्माणाय विवर्तनाय च परःसहस्रं पण्डिताग्रेसराः परिक्लिश्यन्त इदानीम् । तेषां पृथक्पृथङ्मुद्रापणाय परोलक्षं प्रयस्यन्ति मानवाः । सुमहान् विनियुज्यते च धनराशिः । केवलमेकभाषामये जगति सम्पन्ने सर्वमिदं काकदन्तपरीक्षणसदृक्षमेव परिणंस्यति । किमितः परमाशास्यं नामान्यत् । एकस्य प्रयासेन समस्तो जनसमुदाय उपकरिष्यत इति तादृशे काले कियती भवेल्लोकस्याभिवृद्धिरिति चक्षुषी निमील्य संचिन्तयन्तु वाचकमहाभागाः ।

एकस्मिन् राज्येऽपि वा यत्रोपलभ्यते भाषैक्यं तद्राज्यवासिनां सुमहानभ्युदयः समवलोक्यतेऽस्माभिः। अत्र च निदर्शनमाङ्गलेयसमुदाय एव । तेषां सकलविधमपि विज्ञानजातं राज्यव्यापिन्या भाषाया एकत्वेनैव सुशकप्रचारं

क्रियते। तेन च समृद्धिमेति तेषां समुदायः। पुरोगामितां चाकलयति सकलेष्वपि कृत्यजातेषु। सत्येवं राज्यमात्रभाषैक्यगुणातिरेके लोककुटुम्बकस्य भाषैक्यं क्रियते गुणातिशयाय सम्पद्येतेत्येतदालोच्यतां सहृदयाग्रेसरैः। कियच्च तदानीमन्योन्यव्यवहारादिनिर्वहणलाघवं समुत्पद्येत? कियांश्च कलहः परस्परहृदयानवगममूलकः समुन्मूल्येत?।

आस्तामेतत्। एकस्मिन् राज्ये निवसतामपि भारतीयानां नास्ति काचिदेका भाषेत्येतदतीव मनस्तुदति मनीषावतां भारतीयानाम्। भारतीयानामुद्गतिप्रतिबन्धकेष्विदमेव प्राथम्यमावहति, यदेतेषां नास्ति काचिदेका भाषा व्यवहारक्षमेति। हिमवतः सानुषु निवसन्तः किमप्यन्यदाचरन्ति। सेतोः सन्निधिमावसन्तोऽन्यदेव किमपि कलयन्ति। न हि भारतीया अन्योन्यमवबोधयन्ति स्वेषामुद्यमसरणिम्। न चास्ति तेषामेकं सामान्यं शरव्यम्। यदेत एकाग्रेण हृदयेनानुविध्येयुः। सर्वस्यास्य दशाविशेषस्य बीजं भाषाभेद एवेति को न संमन्येत मनीषी?। एवंविधमवस्थाविशेषं परावर्तयितुमभिलषन्ति कतिपये महोत्साहा देशाभिमानिनः। तेष्वपि बहवो बहुभिः प्रकारैरभिप्रयन्ति। केचन हिन्दीभाषां साम्प्रतमेव बहुषु प्रदेशेषु सिद्धप्रचारां समग्रेऽपि भारते प्रचारणीयां मन्यन्ते। मनोरथवशंवदाः केचिदितरे गीर्वाणगिरां प्रचारमावश्यकमामनन्ति। यद्यपि गाढालोचनामन्तरेण विषयेऽस्मिन् विनिश्चितः कश्चिदाशयो न शक्यते प्रकाशयितुम्।

इदं पुनरधुना मे मनसि वर्त्तते। गैर्वाणी किल भारतीयानां मातृभाषेति सर्वसम्मतोऽयं विषयः। गैर्वाण्यां कतिपयानपि वा पदसार्थानविदन्तो नोपलभ्येरन्नशिक्षिताक्षरेष्वपि भारतीयेषु। अतो गैर्वाणी तस्याः संनिकृष्टतमा वा काचन भाषैव भारतीयानां साधारण्येन सुगमा स्वादीयसी च भवेदिति नैसर्गिकमेतत्। तत्रापि बहुतरव्याकरणनियमजालजटिला जनसामान्यस्य दुरुत्तरा च गैर्वाणी नार्हति प्रथमं प्रवेशम्। चक्रनेमिक्रमानुसारिणी हि लोकगतिः। कदाचन काले सर्वत्र प्रचरितापि गैर्वाणी यया यया विधया क्रमेणाधोगतिमवापत्तादृशीभिरेव कक्षाभिः प्रातिलोम्येन पुनरुन्नतिं सा प्रापयितव्या। न ह्येकपद एव पाताळतलमधिवसन् स्वर्गसभामारोढुं प्रभवेत्। पालीहिन्दुस्थानीप्रभृतयो भाषा गैर्वाण्याः सन्निकृष्टतमा इति ता एव गैर्वाण्याः प्रथमपतनभूमिरित्यनुमातुं शक्यते। ताश्च भारतीयानां सर्वसाधारण्येन सुगमाश्च भविष्यन्ति। अतः कार्यसिद्धिमहिमानैः प्रथमं तादृशीनामन्यतमा लघीयसी काचिदाश्रयणीया प्रचारणाय। आशामोदकखादनेनापि ये तृप्तिमनुभवन्ति मनोरथमहासौधनिवासिनो महानुभावास्तेऽमी गैर्वाणीप्रथमप्रचारणमर्कटमुष्टिं मा स्म नाम परिहासिषुः। येषां पुनरिदं मदीयमाशयप्रकाशनमेवाशामोदकखादनप्रायं प्रतिभाति तेऽपि मा स्म मां परिहासिषुः। "आत्यन्तिकासिद्धिविलम्बसिध्योः कार्यस्य कार्यस्य शुभा विभाती"तीदं महाकविसुभाषितमेव मादृशां समाधानस्थानम्। अथवा तथ्यमाह महाकविशिखामणि"र्मनोरथानामतटाः प्रपाता" इति॥

कोकिलः।

# गुरुवायुपुरेशाष्टकम् ।

अज्ञानाय विचारयन्ति सुधियो
युक्ता विवेकादिभि-
र्द्वैतभ्रान्तिनिरासिने श्रुतिशिरां-
स्यद्वैतवादीन्यलम् ।
चित्तालम्बिमलापनोदनपरान्
धर्मांश्च संचिन्वते
देवं तं गुरुवायुगेहनिलयं
तेजोमयं भावये ॥ १ ॥

यत्राध्यस्तमिदं जगत् स्थिरचरं
शुक्लं च रक्तं तथा
कृष्णं सत्यवदुज्ज्वलत्यविदुषां
चेतस्युदञ्चन्मले ।
यत्पादाम्बुजसेवया च विदुषां
नैतत् प्रमादास्पदं
देवं तं ......... भावये ॥ २ ॥

यद्भासा स्थिरजङ्गमं जगदिदं
चित्रं विभातं तथा
यं भान्तं ह्यनुभाति सर्वमपि तद्-
भास्वत्सहस्रोपमम् ।
वेदान्तार्थविचारनिर्मलधियो
ध्यायन्ति यं योगिनो
देवं तं ......... भावये ॥ ३ ॥

अंहोनुज्ञानिमण्डलेडितकथा
यस्येह संसारिणां
संसारभ्रमरोगभेषजमिति
प्रोक्ता विशुद्धाशयैः ।
यामापीय सकृत्कयाथुतनय-
ज्येष्ठाः परं पेदिरे
देवं तं ......... भावये ॥ ४ ॥

स्वान्ते यं रमणीयमूर्तिमपरे
कृत्वा रमन्ते चिरं
यः काळाम्बुदनीलकोमळतनु-
स्तान् रञ्जयत्यन्वहम् ।
यद्भीत्या पवते मरुत्तपति यद्-
भीत्या च तिग्मद्युति-
र्देवं तं गुरुवायुगेहनिलयं
तेजोमयं भावये ॥ ५ ॥

मायेयं प्रळयावसानसमये
येनेक्षिता स्रक्ष्यता
रूपं नाम च वाङ्मयं भ्रमिकरं
संभाव्य सर्वं जगत् ।
आविर्भावयति प्रतीतगगनो-
त्फुल्लप्रसूनायितं
देवं तं ......... भावये ॥ ६ ॥

जिज्ञासीत जगज्जनिस्थितिलया
यस्मात्परस्माद्विभो-
स्तद्ब्रह्मेति हि घोषयन्त्युपनिष-
च्छ्रेण्यः समुद्दिश्य यम् ।
स्फायद्बुद्ध्युपरूढदृश्यनिवह-
द्रष्टारमब्जेक्षणं
देवं तं ......... भावये ॥ ७ ॥

व्योम्नः कुड्यघटाद्युपाधिकलितः
शब्दश्च तत्प्रत्ययो
यद्वत्तद्वदखण्डसत्सुखचिदा-
कारस्य यस्यात्मनः ।
शब्दप्रत्ययभाक्त्वमौपनिषदं
विज्ञायते योगिभि-
र्देवं तं ......... भावये ॥ ८ ॥

वेङ्कटसुब्रह्मण्यक्षोणीदेवो मुरारिगुणनिरतः ।
अकरोदष्टकमिष्टप्राप्त्यै शिष्टेष्टकारि सुरतरुवत् ॥

# വിഷയാനുക്രമണിക.

## संस्कृतलेखनविषयाः ।





